# अनात्मश्रीविगर्हणप्रकरणम्

https://sa.wikisource.org/s/1s78

।।अनात्मश्रीविगर्हणप्रकरणम्।।

लब्धा विद्या राजमान्या ततः किं

प्राप्ता संपत्प्राभवाढ¬ा ततः किम्।

भुक्ता नारी सुन्दराङ्गी ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.1।।

केयूराद्यैर्भूषितो वा ततः किं

कौशेयाद्यैरावृतो वा ततः किम्।

तृप्तो मृष्टान्नादिना वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.2।।

दृष्टा नाना चारुदेशास्ततः किं

पुष्टाश्चेष्टा बन्धुवर्गास्ततः किम्।

नष्टं दारिद्र¬ादिदुःखं ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.3।।

स्नातस्तीर्थे जह्नुजादौ ततः किं

दानं दत्तं द्व्यष्टसंख्यं ततः किम्।

जप्ता मन्त्राः कोटिशो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.4।।

गोत्रं सम्यग्भूषितं वा ततः किं

गात्रं भस्माच्छादितं वा ततः किम्।

रुद्राक्षादिः सद्धृतो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.5।।

अन्नैर्विप्रास्तर्पिता वा ततः किं

यज्ञैर्देवास्तोषिता वा ततः किम्।

कीर्त्या व्याप्ताः सर्वलोकास्ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.6।।

कायः क्लिष्टश्चोपवासैस्ततः किं

लब्धाः पुत्राः स्वीयपत्न्यास्ततः किम्।

प्राणायामः साधितो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.7।।

युद्धे शत्रुर्निर्जितो वा ततः किं

भूयो मित्रैः पूरितो वा ततः किम्।

योगैः प्राप्ताः सिद्धयो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.8।।

अब्धिः पद्भ्यां लङ्घितो वा ततः किं

वायुः कुम्भे स्थापितो वा ततः किम्।

मेरुः पाणावुद्धृतो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.9।।

क्ष्वेलः पीतो दुग्धवद्वा ततः किं

वह्निर्जग्धो लाजवद्वा ततः किम्।

प्राप्तश्चारः पक्षिवत्खे ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.10।।

बद्धाः सम्यक्पावकाद्यास्ततः किं

साक्षाद्विद्धा लोहवर्यास्ततः किम्।

लब्धो निक्षेपोऽञ्जनाद्यैस्ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.11।।

भूपेन्द्रत्वं प्राप्तमुर्व्यां ततः किं

देवेन्द्रत्वं संभृतं वा ततः किम्।

मुण्डीन्द्रत्वं चोपलब्धं ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.12।।

मन्त्रैः सर्वः स्तम्भितो वा ततः किं

बाणैर्लक्ष्यो भेदितो वा ततः किम्।

कालज्ञानं चापि लब्धं ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.13।।

कामातङ्कः खण्डितो वा ततः किं

कोपावेशः कुण्ठितो वा ततः किम्।

लोभाश्लेषो वर्जितो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.14।।

मोहध्वान्तः पेषितो वा ततः किं

जातो भूमौ निर्मदो वा ततः किम्।

मात्सर्यार्तिर्मीलिता वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.15।।

धातुर्लोकः साधितो वा ततः किं

विष्णोर्लोको वीक्षितो वा ततः किम्।

शंभोर्लोकः शासितो वा ततः किं

येन स्वात्मा नैव साक्षात्कृतोऽभूत्।। 1.16।।

यस्येदं ह्मदये सम्यगनात्मश्रीविगर्हणम्।

सदोदेति स एवात्मसाक्षात्कारस्य भाजनम्।। 1.17।।

अन्ये तु मायिकजगद्भ्रान्तिव्यामोहमोहिताः।

न तेषां जायते क्वापि स्वात्मसाक्षात्कृतिर्भुवि।। 1.18।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यस्य

श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य

श्रीमच्छंकरभगवतः कृतौ

अनात्मश्रीविगर्हणप्रकरणं

संपूर्णम्।।